# चम्पूरामायणे

# बालकाण्डम्

०२ – ३०.१०.२०१७

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



# पुनरावर्तनम्

- काव्यप्रभेदाः
- चम्पूकाव्यानामितिहासः
- चम्पूरामायणस्य, तत्कर्तुः भोजराजस्य च परिचयः
- मङ्गलश्लोकः

लक्ष्मीं तनोतु नितरामितरानपेक्षमङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।
हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं विघ्नाद्रिभेदशतधारधुरन्धरं नः ॥१॥

- अन्वयः – इतरानपेक्षं निगमशाखिशिखाप्रवालम् अम्बुरुहडम्बरचौर्यनिघ्नं विघ्नाद्रिभेदशतधारधुरन्धरं हैरम्बम् अङ्घ्रिद्वयं नः नितरां लक्ष्मीं तनोतु ।
- तात्पर्यम् – अद्वितीयं, वेदान्तवेद्यं, कमलवत् सुन्दरं, सर्वविघ्नविनाशकं गणेशस्य चरणयुगलम् अस्माकम् अतिशयेन सम्पत्तिं विस्तारयतु ।

Vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam · Value Education · Technology

उच्चैर्गतिर्जगति सिद्ध्यति धर्मतश्चेत्
तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चेत्
तानन्तरेण निपतेत् क्व नु मत्प्रणामः ॥२॥

- विप्रनमस्काररूपं द्वितीयं मङ्गलम् ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

उच्चैर्गतिर्जगति सिद्ध्यति धर्मतश्चेत् तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चेत् तानन्तरेण निपतेत् क्व नु मत्प्रणामः ॥२॥

- पदच्छेदः
- उच्चैः, गतिः, जगति, सिद्ध्यति, धर्मतः, चेत्, तस्य, प्रमा, च, वचनैः, कृतक-इतरैः, चेत्, तेषां, प्रकाशन-दशा, च, मही-सुरैः, चेत्, तान्, अन्तरेण, निपतेत्, क्व, नु, मत्-प्रणामः ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

उच्चैर्गतिर्जगति सिद्ध्यति धर्मतश्चेत् तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चेत् तानन्तरेण निपतेत् क्व नु मत्प्रणामः ॥२॥

- सिद्ध्यति = निष्पन्ना भवति
- किम्? जगति उच्चैः गतिः = प्रपञ्चे उन्नतस्थानं स्वर्गादि
- कथम्? धर्मतः = वेद-शास्त्रोक्त-धर्माचरणेन
- चेत् = यदि

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

उच्चैर्गतिर्जगति सिद्ध्यति धर्मतश्चेत् तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चेत् तानन्तरेण निपतेत् क्व नु मत्प्रणामः ॥२॥

- सिद्ध्यति = निष्पन्ना भवति
- किम्? तस्य प्रमा = धर्मस्य यथार्थानुभवः
- कथम्? कृतकेतरैः वचनैः = अकृत्रिमैः कथनैः, वेदवाक्यैः
- चेत् = यदि

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

उच्चैर्गतिर्जगति सिद्ध्यति धर्मतश्चेत् तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चेत् तानन्तरेण निपतेत् क्व नु मत्प्रणामः ॥२॥

- सिद्ध्यति = निष्पन्ना भवति
- किम्? तेषां प्रकाशन-दशा = पाठतः अर्थतश्च स्फुटीकरणप्रकारः
- कथम्? मही-सुरैः । मह्याः = भुवः, सुराः = देवाः, तैः । भूदेवैः, द्विजैः ।
- चेत् = यदि

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

उच्चैर्गतिर्जगति सिद्ध्यति धर्मतश्चेत् तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चेत् तानन्तरेण निपतेत् क्व नु मत्प्रणामः ॥२॥

- तान् अन्तरेण = महीसुरान् विना
- क्व नु = कुत्र वा
- मत्प्रणामः = मत्कृतः नमस्कारः
- निपतेत् = प्रवर्तेत?

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

उच्चैर्गतिर्जगति सिद्ध्यति धर्मतश्चेत् तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चेत् तानन्तरेण निपतेत् क्व नु मत्प्रणामः ॥२॥

- अन्वयः – जगति उच्चैः गतिः धर्मतः सिद्ध्यति चेत्, तस्य प्रमा च कृतकेतरैः वचनैः (सिद्ध्यति) चेत्, तेषां प्रकाशनदशा च महीसुरैः (सिद्ध्यति) चेत्, तान् अन्तरेण मत्प्रणामः क्व नु निपतेत्?
- तात्पर्यम् – प्रपञ्चे उन्नतस्थानप्राप्तिः वेदशास्त्रोक्तस्य धर्मस्य आचरणेन सिद्ध्यति, धर्मस्य तत्त्वज्ञानं वेदमूलकम्, वेदानां ज्ञानं ब्राह्मणेभ्यः प्राप्यते, अतः ब्राह्मणान् विना अन्येषां नमस्कारः कथं क्रियेत? परमश्रेयोहेतूनां वेदविदां द्विजानां नमस्कारो विधीयते इत्यर्थः ।

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

उच्चैर्गतिर्जगति सिद्ध्यति धर्मतश्चेत् तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चेत् तानन्तरेण निपतेत् क्व नु मत्प्रणामः ॥२॥

- सिद्ध्यति – 'षिधु संराद्धौ' (६, परस्मै), लट् प्रथम.१
- निपतेत् – 'पत्लृ गतौ' (१, परस्मै), विधिलिङ् प्रथम.१
- तान् अन्तरेण – 'अन्तरान्तरेण युक्ते' (२.३.४) इति द्वितीया
- उच्चैः – सकारान्तम् अव्ययम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

उच्चैर्गतिर्जगति सिद्ध्यति धर्मतश्चेत् तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चेत् तानन्तरेण निपतेत् क्व नु मत्प्रणामः ॥२॥

- गतिः – गम्+क्तिन् (कृत्)। इकारान्तः, स्त्री, १.१
- जगति – तकारान्तः, नपुं, ७.१
- धर्मतः – धर्म + तसिल् (तद्धितः – पञ्चम्यर्थे) । अव्ययम् ।
- कृतकेतरैः – कृतकेभ्यः इतरे, तैः ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

उच्चैर्गतिर्जगति सिद्ध्यति धर्मतश्चेत् तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चेत् तानन्तरेण निपतेत् क्व नु मत्प्रणामः ॥२॥

- प्रकाशनदशा – प्रकाशनस्य दशा ।
- महीसुरैः – मह्याः सुराः, तैः ।
- मत्प्रणामः – मम प्रणामः ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

उच्चैर्गतिर्जगति सिद्ध्यति धर्मतश्चेत् तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चेत् तानन्तरेण निपतेत् क्व नु मत्प्रणामः ॥२॥

- एकावल्यलङ्कारः – ‘यत्र विशेषणभावः पूर्वंपूर्वं प्रति क्रमेणैव । भजति परम्परमेषालंकृतिरेकावली कथिता’ ।
- वसन्ततिलकावृत्तम् ।

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

गद्यानुबन्धरसमिश्रितपद्यसूक्तिः
हृद्या हि वाद्यकलया कलितेव गीतिः ।
तस्माद्दधातु कविमार्गजुषां सुखाय
चम्पूप्रबन्धरचनां रसना मदीया ॥३॥

- सहृदयानाम् आसक्तिप्रचोदनाय चिकीर्षितस्य काव्यस्य स्वरूपनिरूपणम्

गद्यानुबन्धरसमिश्रितपद्यसूक्तिः हृद्या हि वाद्यकलया कलितेव गीतिः ।
तस्माद्दधातु कविमार्गजुषां सुखाय चम्पूप्रबन्धरचनां रसना मदीया ॥३॥

- पदच्छेदः
- गद्य-अनुबन्ध-रस-मिश्रित-पद्य-सूक्तिः, हृद्या, हि, वाद्य-कलया, कलिता, इव, गीतिः, तस्मात् दधातु कवि-मार्ग-जुषाम्, सुखाय, चम्पू-प्रबन्ध-रचनाम्, रसना, मदीया

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

गद्यानुबन्धरसमिश्रितपद्यसूक्तिः हृद्या हि वाद्यकलया कलितेव गीतिः ।
तस्माद्दधातु कविमार्गजुषां सुखाय चम्पूप्रबन्धरचनां रसना मदीया ॥३॥

- वाक्यद्वयम् । प्रथमवाक्ये भवति इति क्रियापदम् अध्याह्रियते ।
- किम् भवति? गद्यानुबन्धरसमिश्रितपद्यसूक्तिः । गद्यानि अपादनिवद्धानि, गद्यानाम् अनुबन्धः = अनुषङ्गः, तेन यः रसः = आस्वादः, तेन मिश्रिता = मिलिता, पद्यानाम् = वृत्तबद्धानां श्लोकानां सूक्तिः = सम्यग्रचना

# गद्यानुबन्धरसमिश्रितपद्यसूक्तिः हृद्या हि वाद्यकलया कलितेव गीतिः ।
# तस्माद्दधातु कविमार्गजुषां सुखाय चम्पूप्रबन्धरचनां रसना मदीया ॥३॥

- कीदृशी भवति? हृद्या = मनोज्ञा, सहृदय-हृदयाह्लादिनी
- किमिव? वाद्यकलया = वीणावेणुमृदङ्गादिवाद्यशिल्पेन, कलिता = मिश्रिता, गीतिः = गानविद्या इव
- हि = निश्चयेन
- तस्मात् = गद्यपद्यमिश्रितप्रबन्धस्य सर्वानन्दकरत्वात्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

गद्यानुबन्धरसमिश्रितपद्यसूक्तिः हृद्या हि वाद्यकलया कलितेव गीतिः ।
तस्माद्दधातु कविमार्गजुषां सुखाय चम्पूप्रबन्धरचनां रसना मदीया ॥३॥

- दधातु = प्रवर्तयतु, पोषयतु
- का दधातु? मदीया रसना = मम जिह्वा
- किं दधातु? चम्पू-प्रबन्ध-रचनाम् = चम्पूः इत्याख्यस्य काव्यस्य निर्माणं
- किमर्थम्? कविमार्गजुषाम् – कवीनां मार्गः = पन्थाः, तेन जुषन्ते = प्रीयन्ते, तेषाम्, कवितारसाभिज्ञानाम् । सुखाय = मनोरञ्जनाय ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

गद्यानुबन्धरसमिश्रितपद्यसूक्तिः हृद्या हि वाद्यकलया कलितेव गीतिः ।
तस्माद्दधातु कविमार्गजुषां सुखाय चम्पूप्रबन्धरचनां रसना मदीया ॥३॥

- अन्वयः – गद्यानुबन्धरसमिश्रितपद्यसूक्तिः वाद्यकलया कलिता गीतिः इव हृद्या हि। तस्मात् कविमार्गजुषां सुखाय मदीया रसना चम्पूप्रबन्धरचनां दधातु ।
- तात्पर्यम् – गद्य-पद्ययोः मिश्रणरूपं चम्पूकाव्यं वाद्यमिश्रितं गानमिव सर्वानन्दकरं भवति । अतः काव्यरसास्वादिनां मनोरञ्जनाय मम जिह्वा चम्पूकाव्यस्य निर्माणं करोतु / निर्माणे प्रवर्तताम् ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

गद्यानुबन्धरसमिश्रितपद्यसूक्तिः हृद्या हि वाद्यकलया कलितेव गीतिः ।
तस्माद्दधातु कविमार्गजुषां सुखाय चम्पूप्रबन्धरचनां रसना मदीया ॥३॥

- दधातु – 'डुधाञ् धारणपोषणयोः' (३.उभय) । लोट्, प्रथम.१ ।
- गद्य... – गद्यानाम् अनुबन्धः, गद्यानुबन्धस्य रसः, गद्यानुबन्धरसेन मिश्रिता, पद्यानां सूक्तिः, गद्या...मिश्रिता पद्यसूक्तिः । इकारान्तः, स्त्री, १.१ ।
- हृद्या – हृदयस्य प्रिया । हृदय + यत् (तद्धितः) ।
- वाद्यकलया – वाद्यानां कला, तया ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

गद्यानुबन्धरसमिश्रितपद्यसूक्तिः हृद्या हि वाद्यकलया कलितेव गीतिः ।
तस्माद्दधातु कविमार्गजुषां सुखाय चम्पूप्रबन्धरचनां रसना मदीया ॥३॥

- कविमार्गजुषाम् – कवीनां मार्गः, कविमार्गस्य जुषः, तेषाम् । षकारान्तः पुं, ६.३ । जुट्, जुषौ, जुषः.... जुषः, जुषोः, जुषाम् ।
- चम्पू... – चम्प्वाः प्रबन्धः, चम्पूप्रबन्धस्य रचना, ताम् ।
- रसना – 'रसज्ञा रसना जिह्वा' (अमरः), आकारान्तः, स्त्री, १.१ ।
- मदीया – मम इयम् । तद्धितः छप्रत्ययः ।

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

गद्यानुबन्धरसमिश्रितपद्यसूक्तिः हृद्या हि वाद्यकलया कलितेव गीतिः ।
तस्माद्दधातु कविमार्गजुषां सुखाय चम्पूप्रबन्धरचनां रसना मदीया ॥३॥

- पूर्णोपमा । 'उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः' ।
- उपमेयः – गद्यानुबन्धरसमिश्रितपद्यसूक्तिः,
- उपमानम् – वाद्यकलया कलिता गीतिः
- साधारणधर्मः – हृद्यत्वम्, उपमावाचकः – इव ।

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

वाल्मीकिगीतरघुपुङ्गवकीर्तिलेशैः
तृप्तिं करोमि कथमप्यधुना बुधानाम् ।
गङ्गाजलैर्भुवि भगीरथयत्नलब्धैः
किं तर्पणं न विदधाति नरः पितॄणाम् ॥४॥

- वाल्मीकेः सर्वोत्कृष्टे रामायणे वर्तमाने नूतनरामायणप्रबन्धः कुतः?

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

वाल्मीकिगीतरघुपुङ्गवकीर्तिलेशैः तृप्तिं करोमि कथमप्यधुना बुधानाम् ।
गङ्गाजलैर्भुवि भगीरथयत्नलब्धैः किं तर्पणं न विदधाति नरः पितॄणाम् ॥४॥

- पदच्छेदः – वाल्मीकि-गीत-रघु-पुङ्गव-कीर्ति-लेशैः, तृप्तिम्, करोमि, कथमपि, अधुना, बुधानाम्, गङ्गा-जलैः, भुवि, भगीरथ-यत्न-लब्धैः, किम्, तर्पणम्, न, विदधाति, नरः, पितॄणाम् ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

वाल्मीकिगीतरघुपुङ्गवकीर्तिलेशैः तृप्तिं करोमि कथमप्यधुना बुधानाम् ।
गङ्गाजलैर्भुवि भगीरथयत्नलब्धैः किं तर्पणं न विदधाति नरः पितॄणाम् ॥४॥

- करोमि – सम्पादयामि
- किम्? तृप्तिम् – सन्तुष्टिम्
- केषाम्? बुधानाम् – पण्डितानाम्
- कदा? अधुना - इदानीम्
- कथम्? कथमपि – महता प्रयत्नेन

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

वाल्मीकिगीतरघुपुङ्गवकीर्तिलेशैः तृप्तिं करोमि कथमप्यधुना बुधानाम् ।
गङ्गाजलैर्भुवि भगीरथयत्नलब्धैः किं तर्पणं न विदधाति नरः पितॄणाम् ॥४॥

- केन? वल्मीकस्यापत्यं वाल्मीकिः, तेन गीताः = उपवर्णिताः, रघूणां पुङ्गवः = श्रेष्ठः श्रीरामः, तस्य कीर्तीनाम् = वीर्यौदार्यादिगुणमूलकस्य यशसः, लेशाः = लवाः, तैः
- ‘चरितं रघुनाथस्य शतकोटिप्रविस्तरम्’ ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

वाल्मीकिगीतरघुपुङ्गवकीर्तिलेशैः तृप्तिं करोमि कथमप्यधुना बुधानाम् ।
गङ्गाजलैर्भुवि भगीरथयत्नलब्धैः किं तर्पणं न विदधाति नरः पितॄणाम् ॥४॥

- विदधाति = निर्वर्तयति
- कः? नरः = कश्चिन्मनुष्यः
- किम्? तर्पणम् = निवापाञ्जलिदानेन सन्तृप्तिम्
- केषाम्? पितॄणाम् = पूर्वजानाम्

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam · Value Education · Technology

वाल्मीकिगीतरघुपुङ्गवकीर्तिलेशैः तृप्तिं करोमि कथमप्यधुना बुधानाम् ।
गङ्गाजलैर्भुवि भगीरथयत्नलब्धैः किं तर्पणं न विदधाति नरः पितॄणाम् ॥४॥

- केन? गङ्गाजलैः = भागीरथीसलिलैः
- कीदृशैः? भुवि = भूलोके, भगीरथस्य यत्नेन लब्धैः
- न विदधाति किम्? – काकुः । विदधात्येव ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

वाल्मीकिगीतरघुपुङ्गवकीर्तिलेशैः तृप्तिं करोमि कथमप्यधुना बुधानाम् ।
गङ्गाजलैर्भुवि भगीरथयत्नलब्धैः किं तर्पणं न विदधाति नरः पितॄणाम् ॥४॥

- अन्वयः – वाल्मीकिगीतरघुपुङ्गवकीर्तिलेशैः अधुना कथमपि बुधानां तृप्तिं करोमि । भुवि भगीरथयत्नलब्धैः गङ्गाजलैः नरः पितॄणां तर्पणं न विदधाति किम्?
- तात्पर्यम् – यथा भगीरथप्रयत्नेन भूलोकं प्राप्तं गङ्गाजलं सर्वैः नरैः स्वपितॄणां तर्पणार्थमुपयुज्यते, तथा वाल्मीकिमहर्षेः प्रयत्नेन भुवि प्रथतस्य श्रीरामस्य चरितानुवर्णनेन सर्वे कवयः सहृदयानां तुष्टिं सम्पादयन्ति ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

वाल्मीकिगीतरघुपुङ्गवकीर्तिलेशैः तृप्तिं करोमि कथमप्यधुना बुधानाम् ।
गङ्गाजलैर्भुवि भगीरथयत्नलब्धैः किं तर्पणं न विदधाति नरः पितॄणाम् ॥४॥

- करोमि – ‘डुकृञ् करणे’ (८-उभय), लट्, उत्तम-१ ।
- विदधाति – वि+‘डुधाञ् धारणपोषणयोः’ (३-उभय), लट्, प्रथम-१ ।
- वाल्मीकि.. – रघूणां पुङ्गवः, रघुपुङ्गवस्य कीर्तयः, रघुपुङ्गवकीर्तीनां लेशाः। वाल्मीकिना गीताः। वाल्मीकिगीताः रघु..लेशाः, तैः ।
- तृप्तिम् – ‘तृप प्रीणने’ (४,परस्मै) + क्तिन् (कृत्)। इकारान्तः, स्त्री, २.१

वाल्मीकिगीतरघुपुङ्गवकीर्तिलेशैः तृप्तिं करोमि कथमप्यधुना बुधानाम् ।
गङ्गाजलैर्भुवि भगीरथयत्नलब्धैः किं तर्पणं न विदधाति नरः पितृणाम् ॥४॥

- बुधानाम् – 'विद्वान् विपश्चिद् दोषज्ञः सन् सुधीः कोविदो बुधः' (अमरः)
- गङ्गाजलैः – गङ्गायाः जलानि, तैः ।
- भुवि – ऊकारान्तः, स्त्रीलिङ्गः, सप्तमी-१। भूः, भुवौ, भुवः ... भुवि, भुवोः, भूषु ।
- भगीरथ... – भगीरथस्य यत्नः, भगीरथयत्नेन लब्धाः, तैः । अकारान्तः, नपुं, ३.३

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

वाल्मीकिगीतरघुपुङ्गवकीर्तिलेशैः तृप्तिं करोमि कथमप्यधुना बुधानाम् ।
गङ्गाजलैर्भुवि भगीरथयत्नलब्धैः किं तर्पणं न विदधाति नरः पितॄणाम् ॥४॥

- तर्पणम् - 'तृप प्रीणने' (४,परस्मै) + ल्युट् (कृत्)। अकारान्तः, नपुं, २.१
- पितॄणाम् – ऋकारान्तः, पुं, ६.३ ।
- दृष्टान्तालङ्कारः – 'चेद्बिम्ब-प्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः' ।

# सङ्क्षेपः

- उच्चैर्गतिः... – परमश्रेयोहेतूनां वेदविदां विप्राणां नमस्कारः
- गद्यानुबन्ध... – करिष्यमाणस्य चम्पूकाव्यस्य वैशिष्ट्यम्/सौन्दर्यम्
- वाल्मीकिगीत... – वाल्मीकिरामायणस्य आधारेण स्वस्यापि कृतिरचनायाम् अधिकारः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in









- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in